September, October & January, 1935 & 36

THE
CHOWKHAMBÂ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
NOS. 453, 454 & 457.

# वीरमित्रोदय—

## शुद्धिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

भट्टराई-इत्युपपदेन
न्यायाचार्यपण्डितपद्मप्रसादोपाध्यायेन
संशोधितः ।

# VĪRAMĪTRODAYA
## SUDHIPRAKĀSA

by

MAHĀMAHOPĀDHYĀYA PANDIT MITRA MIS'RA

EDITED BY

Nyāyāchārya
Pandit Padma-Prasāda Upādhyāya

FASCICULAS. I-III. १-३.

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Benares City.*

1937

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४५३, ४५४, ४५७.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 453, 454 & 457.

THE

# VĪRAMITRODAYA

# SUDHIPRAKĀS'A

by

MAHĀMAHOPĀDHYĀYA PANDIT MITRA MIS'RA

EDITED BY

Nyāyāchārya

Pandit Padma Prasāda Upādhyāya

Vol. VIII. FASCICULAS. I-III. १ ३.

PUBLISHED BY

JAYA KRISHNA DAS HARI DAS GUPTA

*The Chowkhamba Sanskrit Series Office.*

*BENARES.*

1937.

❀ श्रीः ❀

चौखम्बा–संस्कृत–ग्रन्थमाला

( ग्रन्थ-संख्या ३० )

ग्रन्थाङ्काः ४५३, ४५४, ४५७,

---

श्रीः

# वीरमित्रोदय–

## शुद्धिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

भट्टराई- इत्युपपदेन

न्यायाचार्यपण्डितपद्मप्रसादोपाध्यायेन

संशोधितः ।

---

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

सं० १९९४ वै.

श्रीगुरुः शरणम् ।

# भूमिका ।

हंहो ! विवेकधन्याः ! धर्मैककुल्याः ! विद्वत्तल्लजाः !

अस्मिन् खलु निरवधौ संसरणाम्बुधौ युगपन्मज्जनोन्मज्जनायासानर्थासानिदानमेक-मेव नूनमनूनं तत्त्वज्ञानमाकलयन्ति समुच्छलदविच्छिन्नजन्ममरणपरम्परागिरिणदीप्रवा-हपातदराः श्रुतिस्मृतीतिहासपुराणप्रमाणताऽऽदराः कल्याणकृते कदर्थितकलेवराः कोविद-वराः । अनारोपितस्य रूपस्य साक्षात्कृतिमेव च तत्त्वज्ञानत्वेन व्यवहरन्ति गरीयांसो विवेचकवरीयांसः । अनारोपितं च रूपं तदेव जगति, यद् देशतः कालतो वस्तुतश्चा-परिच्छिन्नम्, श्रुतिश्चात्रानुकूला "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्य"मित्या-दिका । एवंविधस्य च रूपस्य साक्षात्कारो नेन्द्रियव्यापारायत्तजन्मा सम्भावयितुमपि शक्यः प्रमादविधुरैरिति श्रवणमनननिदिध्यासनाहितसंस्कारविशेषैरच्छस्फटिककल्पे मानसमुकुरे प्रतिविम्ब एव सः । विम्बप्रतिविम्बयोश्चौपाधिकमन्यत्वं चकास्ते न तात्त्वि-कमिति न द्वैतिभिर्विद्वेष्टव्यम्, तमेव च 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतिरप्यनुगृह्णा-ति' स च संस्कारविशेषः सामान्यविशेषाधीनामन्दमन्दतासमालिङ्गितमानसे मातङ्गकुले कृतो मन्त्रदीक्षासंस्कार इवापरिसङ्ख्येयजनिजातसंचिताघसन्दोहधूलिधूसरेऽन्तःकरणे नात्मानमेव लभते कुतो वा प्रतिविम्बग्रहणयोग्यतामादधीत, तस्याश्चापगमो न विहि-तानुष्ठितिप्रतिषिद्धपरिहृतिमन्तरा, तत्र प्रतिषिद्धपरिहृतेः सार्वदिकतया विशेषणविशेषान पेक्षत्वेऽपि विहितानुष्ठितेरस्ति समग्राङ्गकलापाधिकारितावच्छेदकविशेषणविशेषग्रामसापे-क्षता, अङ्गकलापाधिकारितावच्छेदकधर्मविशेषविरहाधिकारिका च सा सिकतोप्ता लतेव आधुनिकसुधारककराकर्षणकम्पिता राजनीतिरिव वनितासखीसङ्गता प्रव्र-ज्येव ।दर्भलतामेवासादयतीति कर्मफलाभीप्सुना मनस्विना नित्यनैमित्तिककाम्यभे-देन विभक्तानां त्रयाणां कर्मणामनुष्ठितौ प्रथममधिकारितासम्पादनशीला धर्मविशेषा एवान्वेषणीयाः, तेषु च शौचस्याप्यास्ते विशेषणविशेषता, यदन्तरोप्तमपि कर्मबीजं नापूर्वाङ्कुरं प्रसवितुमीष्टे, तद्विरहे च फल्गुतामेवावलम्बन्ते निखिलान्यपि कर्मजातानि, व्यर्थतामेवोपयाति विशेषत आमुष्मिकप्रयोजनाय प्रयोजितमायासोपार्जितं वसुच-यम् । किं बहुना, अशनायायासितायाऽपि न रोचते शुद्धिहीनतयावगतमदनीयम् । पिपासाकुलितोऽपि नाभिलषति तादृशं शिशिरतरमपि पानीयं पातुम् । बलवत्कायव्या-पारशतैः श्रान्तोऽपि प्रशिथिलाङ्गकलापोऽपि नाकाङ्क्षतेऽपवित्रां निविडविटपिप्रच्छायशी-तलामपि वसुधामध्यासितुमिति सर्वस्मिन्नेव लौकिकेऽलौकिके च वस्तुनि शुद्धिरपेक्षि-तेति कासौ शुद्धिः ? कतिधा च सा ? कतमैरुपायैरुपपादनीयेत्यादिर्विचिकित्साप्रमत्त-करेणुका बाधत एवानारतं निर्णिनीषूणां मनस्विनामन्तःकरणनलिनानि, तन्निराकृतिश्च न शास्त्रीयाध्यवसायतीक्ष्णाङ्कुशपरिग्रहं विना, तत्परिग्रहोऽपि न सम्यग्विवेचनमन्तरा, तद्विवेचनमपि न प्रमाणविषयव्यवस्थां विनेति शुद्ध्यशुद्धिविषये समुपलभ्यमानानां

मुनिवचनानां विषयव्यवस्थायै निर्मितोऽयं महाप्रबन्धः, महाटवीदुर्गमदुर्गकन्दरानिक्षिप्तो महामणिरिव सम्प्रति श्रीजयकृष्णश्रेष्ठिमहोदयानां कथनीयतापथमनवतीर्णेन प्रबलेन प्रयत्नशतेन कथंकथमपि प्रकाश्यतां नीतः।

यश्च नास्ति नः शास्त्रे विश्वासः, शुद्धिश्च मलविरहितस्वरूपं स्वच्छत्वमेव, तच्च प्रत्यक्षप्रमाणसमधिगम्यमेवेत्यनर्थकं तदवधारणार्थमेतावतो ग्रन्थराशेः प्रणयनमिति प्रत्याचक्षीत स प्रतिवक्तव्यः, तदेवमलं शास्त्रैकसमधिगम्यमिति नः सिद्धान्तः, प्रत्यक्षसमधिगम्ये तु तस्मिन् यथाकथञ्चिद् दृश्यानामुपपद्येतापि, आत्मादीनान्त्वदृश्यानां मलिनतामलिनते कथं निर्णीयेताम्, नास्ति कश्चनात्मा, न चार्थकामातिरिक्तौ पुरुषार्थौ, नापि प्रत्यक्षतन्मूलकानुमानातिरिक्तं प्रमाणम्। नापि च जन्मान्तरमिति प्रलपतां च प्रमाणचर्चाचतुरैश्चञ्चचतुरचेतोभिर्नैयायिकतनयैरेव वागिन्द्रियनियमनात्मकमौनव्रतप्रायश्चित्तौ प्रवर्तनीयाः।

किंच—विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥

इति मनुवचनानुसारेण पतितानां तेषां लोमवल्लाङ्गूलवतामिव धर्मानुष्ठितावनधिकारान्नास्त्येव शुद्धेरावश्यकता, ये पुनरधिकारसंपन्नाः पुरुषार्थचतुष्टयप्रमातारः, धर्मस्यैवेतरपुरुषार्थमूलतया धर्मानुष्ठितावेव नियोजितकायवाङ्मनोव्यापाराः, तैः शुद्धेः सामहं ग्राह्यतया तेषां कृते कृतात्मपरिग्रहा ग्रन्थप्रणयननिर्वाहिका कृतिर्न निरर्थतां कथमप्यापद्यत इत्यलं निर्मर्यादैः पण्डितंमन्यैः शुष्ककलहेनेति।

यद्यपि शुद्धिनिरूपणपराः सन्ति बहुशो मन्वर्थमुक्तावलीमिताक्षरापरार्कबालम्भट्टीप्रभृतिपरिवारपरिबृंहिताः, षडशीतित्रिंशच्छ्लोकीशुद्धिविवेकशुद्धितत्त्वसिन्धुप्रभृतिपरिचारिकाशतैः सादरं सेविता अमिताः संहिताः, तथापि ता बहुलपक्षपक्षपातिनीयामिनीतमस्तोममेचकिताः काशीपुरीसरणिश्रेणय इवान्तरा प्रकाशं न सम्यक् शुद्धिपदवीनिर्धारणाय पर्याप्ता इति स्वजनुषा महीमण्डलमण्डनायमानमिथिलामण्डलं मण्डयद्भिस्तत्रभवद्भिर्महामहोपाध्यायैर्मित्रमिश्रमहोदयैराध्यात्मिकाधिभौतिकरूपा ये केचन शुद्धिप्रकारास्ते समेऽपि अस्मिन्निबन्धे प्रमाणयुक्त्युपन्यासपूर्वकं निष्टङ्किता इति सर्वमपि प्रकृतनिबन्धावलोकनसमनन्तरमेव स्वयमनुभवपथमवतरिष्यति शेमुषीविशेषजुषां सहृदयधौरेयाणामित्यलमात्मनो मुधा वाचाटताप्रकटनकौशलकलासमाश्रयणेनेति। अत्र च वाराणसीपुरीविराजमानराजकीयपुस्तकालयगतं लिखितं शुद्धप्रायमेकमादर्शपुस्तकं शरणीकृत्य संशोधनादिकार्ये जाते, प्रमादतो जातानामशुद्धीनां ज्ञापके शुद्धिपत्रे, प्रबन्धगतानां विषयाणामनुक्रमणे च यथाशक्तिशेमुषि संपादितेऽपि तपोज्ञानसहायशून्यैश्चर्मदृशौर्मादृशैः साहजिकानां दोषाणां साकल्येन निरसितुमशक्यतया तत्र तत्र बहूपप्लुतं स्यात्, तत्र च परिचितस्थानप्रयत्ना विहितागमयत्ना अपश्चिमा विपश्चित एव नः शरणमिति—

संशोधकः।

॥ श्रीः ॥

अथ वीरमित्रोदयशुद्धिप्रकाशस्य

# विषयानुक्रमणिका।

| विषयः | पृष्ठसंख्या |
|---|---|
| आदौ श्लोकद्वयेन नृसिंहस्तवनम्। | १ |
| तृतीयश्लोकेन कृष्णस्तवनम्। | ,, |
| चतुर्थश्लोकेन शिवस्तुतिः। | ,, |
| पञ्चमश्लोकेन गणेशस्तुतिः। | ,, |
| षष्ठश्लोकेन भगवतीस्तुतिः। | ,, |
| सप्तमाष्टमश्लोकाभ्यां मेदिनीमल्लनाम्नो नरपतेर्वर्णनम्: | २ |
| नवमदशमश्लोकाभ्यां तत्पुत्रस्यार्जुननाम्नो नृपस्य वर्णनम्। | ,, |
| एकादशद्वादशश्लोकाभ्यामर्जुनपुत्रस्य मलखानाख्यस्य नृपस्य पराक्रमवर्णनम्। | ,, |
| त्रयोदशचतुर्दशश्लोकाभ्यां तत्पुत्रस्य प्रतापरुद्रस्य वर्णनम्। | ,, |
| ततः श्लोकत्रयेण प्रतापरुद्रतनूजस्य मधुकरसाहस्य वर्णनम्। | ,, |
| अष्टादशश्लोकेन पुत्रे वीरसिंहे राज्यं प्रतिष्ठाप्य मधुकरसाहस्य द्युलोकगमनकथनम्। | ३ |
| ततोऽष्टाभिः श्लोकैर्वीरसिंहस्य वर्णनम्। | ,, |
| ततो जुझारसिंहनृपतेर्वर्णनम्। | ४ |
| ततस्तत्पुत्रस्य विक्रमादित्यस्य वर्णनम्। | ५ |
| चत्वारिंशत्तमेन श्लोकेन श्रीहंसपण्डितस्य वर्णनम्। | ,, |
| ततस्तत्पुत्रस्य परशुराममिश्रस्य जन्मकथनम्। | ६ |
| ततस्तत्पुत्रस्य मित्रमिश्रस्य जन्मकथनम्। | ,, |
| श्रीवीरसिंहाज्ञया शुद्धिप्रकाशनिर्मितौ स्वस्य प्रवृत्तिकथनम्। | ,, |
| शुद्धिप्रकाशविषयानुक्रमणिकाकथनम्। | ,, |
| आशौचसंसर्गाभावस्य शुद्धिपदार्थत्वकथनम्। | ८ |
| मतान्तरखण्डनपूर्वकं शुद्ध्यन्तर्गताशौचपदार्थनिरूपणम्। | ,, |
| शुद्धिभेदकथनम्। | ९ |
| रजस्वलाऽऽशौचनिरूपणम्। | १० |
| दशवर्षादुत्तरे वयसि रजस उत्पत्तिकथनम्। | ,, |

| विषयः | पृष्ठसंख्या |
|---|---|
| द्वादशवर्षवयस्काया बह्वी रजोदर्शनाभावेऽप्यन्तःपुष्पसद्भावाद्गमनाचित्यप्रतिपादनम् । | १० |
| रजोनिमित्तमाशौचम् । | ,, |
| अविज्ञाते रजसि निर्णयः । | ,, |
| रात्रौ रजसि ग्राह्यदिननिर्णयः । | ,, |
| रजस्वला धर्माः । | ११ |
| रजस्वलाया तैलाभ्यङ्गभूमिखननाञ्जनाञ्जनदन्तधावननखकृन्तनादौ दोषकथनम् । | ,, |
| रजस्वलाया नैमित्तिकस्नानप्राप्तौ तत्प्रकारकथनम् । | १२ |
| रजःस्वलायाः स्नानोत्तरकर्तव्यनिरूपणम् । | ,, |
| रजस्वलाया ज्वराद्यभिभवे शुद्धिप्रकारकथनम् । | ,, |
| तस्या भर्तृशुश्रूषादौ चतुर्थेऽहनि शुद्धिः, दैवे पित्र्ये च रजोनिवृत्तौ पञ्चमादौ शुद्धिः। | १३ |
| त्रयोदशदिनात्पूर्वं रजोदर्शने शुद्धिविचारः । | १४ |
| रजोविशेषे शुद्ध्यपवादः । | ,, |
| चतुर्विधरजोभेदकथनम् । | ,, |
| तत्र रोगजे रजसि स्पर्शादौ दोषाभावाभिधानम् । | ,, |
| यावद्रजोनिवृत्तिर्न भवति तावद् दैवादौ पाकादौ च नाधिकार इति प्रतिपादनम् । | १५ |
| द्रव्यजे रजोविशेषे विशेषाभिधानम् । | ,, |
| गर्भस्रावाशौचम् । | ,, |
| गर्भस्रावे मासतुल्याभी रात्रिभिः शुद्धिकथनम् । | १६ |
| अहःशब्दरात्रिशब्दयोरहोरात्रपरत्वकथनम् । | ,, |
| स्रावशब्दार्थनिर्वचनम् । | ,, |
| "रात्रिभिर्मासतुल्याभि"रिति मनुवचनस्य तृतीयादिमासपरत्वाभिधानम् । | ,, |
| प्रथमद्वितीयमासयोः स्रावे वर्णभेदेनाशौचाभिधानम् । | ,, |
| तत्र रुद्रधरादिमतप्रदर्शनम् । | ,, |
| माधवमतप्रदर्शनम् । | ,, |
| मतान्तरखण्डनपूर्वकमाधवमतस्य युक्तत्वाभिधानम् । | १७ |
| स्रावाशौचे मातुरेव मासतुल्याशौचं सपिण्डानां तु सद्यःशौचमिति कथनम् । | ,, |
| सगुणसपिण्डानां सद्यः, निर्गुणानामहोरात्रम्, यथेच्छाचारिणां त्रिरात्रमिति रुद्रधरमतप्रदर्शनम् । | ,, |
| स्रावाशौचस्य मृतजातपरत्वाभिधानम् । | ,, |
| सप्तममासादारभ्य जीवति जाते मातुः सम्पूर्णाशौचम् । | ,, |
| तत्र प्राच्यानां सपिण्डाशौचव्यवस्था । | १८ |

| विषयः | पृष्ठसंख्या |
|---|---|
| माधवमतप्रदर्शनम् । | ,, |
| स्वमतप्रदर्शनम् । | ,, |
| जननाशौचम् । | ,, |
| जनने सपिण्डेषु शावाशौचवद् दशाहाशौचम् । | १९ |
| सप्तममासप्रभृतिमृतजाते दशाहं सूत्याशौचम् । | ,, |
| नालच्छेदात्प्राक् मृते पित्रादीनां त्रिरात्रं मातुः पूर्णम् । | ,, |
| चातुर्वर्ण्यानां यथाक्रमं दशाहद्वादशाहपक्षमासमभिव्याप्याशौचम् । | ,, |
| अपत्यजनने पितुः स्नानात्पूर्वमस्पृश्यत्वम् । | ,, |
| जननाशौचे सूतिकावर्जं नास्पृश्यत्वम् । | ,, |
| सूतिकाया दशरात्रानन्तरमस्पृश्यत्वनिवृत्तिरूपा शुद्धिः । | २० |
| पुत्रवत्या शुद्ध्यनन्तरं विंशतिरात्रेण कर्माधिकारः । | ,, |
| स्त्रीजनन्याः शुद्ध्यनन्तरं मासेन कर्माधिकारः । | ,, |
| जननाशौचे तत्तद्दिनविहिते कर्मणि प्रथमषष्ठदशमदिनेषु नाशौचम् । | ,, |
| प्रथमषष्ठदशमदिनेषु पक्वान्नं वर्जयित्वा प्रतिग्रहे न दोषः । | २१ |
| पक्वान्नभक्षणे चान्द्रायणम् । | ,, |
| अन्याशौचेऽपि पुत्रजन्मनि तत्कालं शुद्धिः । | ,, |
| बालाद्यशौचनिरूपणम् । | ,, |
| नालच्छेदात्पूर्वं तदुत्तरं वा शिशुमरणे तन्निमित्तं सद्यःशौचम् । | ,, |
| सद्यःशौचपदस्य स्नानाच्छुद्धिपरत्वकथनम् । | |
| रुद्रधरादीनां मतखण्डनम् । | ,, |
| नामकरणोत्तरं षष्ठमासपर्यन्तं दाहे सपिण्डानामेकरात्रं खनने सद्यः । | २२ |
| षण्मासादूर्ध्वं चूडाकरणपर्यन्तमेकाहः । | ,, |
| त्रिवर्षोत्तरमुपनयनपर्यन्तं त्रिरात्रम् । | २३ |
| मातापित्रोरुपनयनपर्यन्तं सर्वत्र त्रिरात्रम् । | २४ |
| बालाद्याशौचं सर्ववर्णसाधारणम् । | ,, |
| मरणाशौचनिरूपणम् । | |
| सोदरभ्रातुर्दन्तजननपर्यन्तं भगिनीमरणे सद्यःशौचं, आचूडादेकरात्रं, विवाहपर्यन्तं त्रिरात्रम् । | ,, |
| सोदरव्यतिरिक्तानां पितृमात्रादिसर्वसपिण्डानां चूडान्तं मरणे सद्यः तदुपरि वाग्दानपर्यन्तमेकरात्रम् । | ,, |
| वाग्दानोत्तरं विवाहात्पूर्वं भर्तृकुले पितृकुले च त्रिरात्रम् । | २५ |
| अत्र माधवमतप्रदर्शनम् । | |

| विषयः | पृष्ठसंख्या |
| --- | --- |
| वाग्दानकालोत्तरं वाग्दानाभावे यावद्विवाहं पितृपक्ष एव त्रिरात्रम् । | २५ |
| अत्र दाक्षिणात्यमतप्रदर्शनम् । | २६ |
| गौड़मतप्रदर्शनम् । | ,, |
| ऊढकन्यायाः पितृगृहे प्रसवमरणयोरशौचव्यवस्था । | २७ |
| तत्रैव मतान्तरप्रदर्शनम् । | २८ |
| परपूर्वायाः शूद्रायाः प्रसवमरणयोस्तद्गर्भजनकस्य यावज्जीवमशौचम् । | ,, |
| पित्रा यस्मै दत्ता तं त्यक्त्वा स्वातन्त्र्यादन्यमाश्रितायाः प्रसवमरणयोर्यमाश्रिता तस्य त्रिरात्रमाशौचम् । | ,, |
| तत्सपिण्डानां नाशौचम् । | ,, |
| सप्तमे पदे पत्नीत्वसंपत्तौ बलाद् गृहीतायाः आप्रसवं पितृगोत्रम् । | ,, |
| प्रसवोत्तरं पूर्वभर्तृगोत्रम् । | ,, |
| सजातीयासु परपूर्वासु भार्यासु प्रसूतासु मृतासु च त्रिरात्रम् । | २९ |
| हीनजातीयासु अहोरात्रम् । | ,, |
| हीनतरजातीयासु नाशौचम् । | ,, |
| अत्र दाक्षिणात्यानां मतप्रदर्शनम् । | ,, |
| सम्पूर्णाशौचनिरूपणम् । | |
| तत्र सपिण्डानां दशाहम् । | ३० |
| सकुल्यानां त्रिरात्रम् । | ,, |
| गोत्रजानां स्नानमात्रम् । | ,, |
| सपिण्डसकुल्यगोत्रजपदार्थनिरुक्तिः । | ,, |
| चतुर्णां वर्णानां यथाक्रमं दशाहद्वादशपञ्चमासैरभिशुद्धिकथनम् । | ,, |
| कन्यानां त्रिपौरुषं सापिण्ड्यम् । | |
| समानोदकानां त्रैविध्यकथनपुरःसरं तेषामशौचकथनम् । | ३१ |
| दासादीनां स्वामितुल्याशौचकथनम् । | ,, |
| असपिण्डाशौचनिरूपणम् । | ,, |
| तत्र आचार्यमरणे त्रिरात्रम् । | ,, |
| तत्पुत्रे पत्न्यां चाहोरात्रम् । | ,, |
| महागुरुषु द्वादशरात्रम् । | ३२ |
| श्रोत्रिये स्वगृहमृते त्रिरात्रम् । | ,, |
| अश्रोत्रिय एकरात्रम् । | ३३ |
| मातुले मातृसहोदरे पक्षिणी । | ,, |
| गुणवति तस्मिन्नेकस्थानमृते त्रिरात्रम् । | ,, |

| विषयः | पृष्ठसंख्या |
| --- | --- |
| मातुर्वैमात्रेयभ्रातरि एकरात्रम्। | ३३ |
| गुरुकुलस्थस्य शिष्यस्य मरण आचार्यस्य त्रिरात्रम्। | ,, |
| अन्यत्र मृते एकाहम्। | ,, |
| यजमानसन्निधौ ऋत्विङ्मरणे यजमानस्य त्रिरात्रम्। | ,, |
| अन्यत्र मृतौ पक्षिणी। | ,, |
| कुलक्रमागतानां याजकानां मरणे त्रिरात्रम्। | ,, |
| अन्येषां पक्षिणी। | ,, |
| आत्मबान्धवेषु पितृबान्धवेषु च पक्षिणी। | ,, |
| मातृबन्धुषु एकरात्रम्। | ३४ |
| श्वश्रूश्वशुरयोः पक्षिणी। | ,, |
| मातामह्याः पक्षिणी। | ,, |
| दौहित्रस्य पक्षिणी। | ,, |
| मातामहस्य त्रिरात्रम्। | ,, |
| श्यालकस्यैकरात्रम्। | ,, |
| श्वश्रूश्वशुरादौ त्रिरात्रपक्षिण्यहोरात्राणां व्यवस्था। | ,, |
| स्वयं दाहादिना संस्कृते दौहित्रे भागिनेये च त्रिरात्रम्। | ३५ |
| उपनयनादिना संस्कृते त्रिरात्रमिति दाक्षिणात्यमतखण्डनम्। | ,, |
| भिन्नस्थानमृते दौहित्रे भगिनीपतौ जामातरि च सद्यःशौचम्। | ,, |
| मातृष्वसृपतिपितृष्वसृपत्योर्मृतौ नाशौचम्। | ३६ |
| मातामहमरणे त्रिरात्रं मातामहीमरणे पक्षिणीति रुद्रधरमप्रदर्शनम्। | ,, |
| अपरिपालकराजमरणे सद्यःशौचम्। | ,, |
| परिपालके राजनि मृते अहोरात्रम्। | ,, |
| यस्य गृहे राजा म्रियते तस्य त्रिरात्रम्। | ,, |
| सतीर्थ्येमृतेऽहोरात्रम्। | ,, |
| औरसेतरपुत्राणां मरणे त्रिरात्रम्। | ३७ |
| सगुणनिर्गुणभेदेनाशौचव्यवस्था। | ३९ |
| तस्या युगान्तरविषयत्वप्रतिपादनम्। | ४४, |
| वर्णसन्निपाताशौचनिरूपणम्। | |
| ब्राह्मणस्य यथाक्रमं ब्राह्मणादिचातुर्वर्ण्यकन्यापरिणये ब्राह्मण्याः प्रसवमरणयोर्दशाहम्। | |
| क्षत्रियायाः प्रसवमरणयोः षडहम्। | ४५ |
| वैश्यायाः प्रसवमरणयोस्त्र्यहम्। | ,, |
| शूद्रायाः प्रसवमरणयोरेकाहम्। | ,, |

| विषयः | पृष्ठसंख्या |
|---|---|
| क्षत्रियस्य वैश्यायाः प्रसवमरणयोस्त्रिरात्रम्। | ४५ |
| क्षत्रियस्य शूद्रायाः प्रसवमरणयोरेकरात्रम्। | ,, |
| वैश्यस्य शूद्रायाः प्रसवमरणयोः षड्रात्रम्। | ,, |
| व्युत्क्रमेण परिणये ब्राह्मण्या दशरात्रम्। | ,, |
| अनन्तरवर्णे सप्तरात्रम्। | ,, |
| एकान्तरे पञ्चरात्रम्। | ,, |
| द्व्यन्तरे त्रिरात्रम्। | ,, |
| इदं च देशभेदव्यवस्थितम्। | ,, |
| विभिन्नजातीनामेकपरिणीतानां सपत्नीनां प्रसवमरणयोर्मिथस्तासां तत्पत्युश्चाशौचव्यवस्था। | ४६ |
| तासामेव पुत्राणामविभक्तानां विभक्तानां च मातृपितृमरणे तेषां मरणे मातृणां पितुश्चाशौचव्यवस्था। | ४७ |
| स्वामिमरणे दासादीनामशौचव्यवस्था। | ४८ |
| विदेशस्थमरण आशौचनिरूपणम्। | |
| मरणनिमित्ताशौचमध्ये मरणश्रवणे शेषदिनैः शुद्धिः। | ४९ |
| आशौचकालातिक्रमेण श्रवणे वत्सरमध्ये त्रिरात्रम्। | ,, |
| वत्सरातिक्रमेण श्रवणे उदकदानसहितस्नानमात्रेण। | ,, |
| अतिक्रान्ताशौचं गृहिण एव न तद्द्रव्यस्य। | ,, |
| मातापित्रोः पत्युश्च वर्षमध्ये त्रिरात्रम्, तदूर्ध्वमेकाहः। | ,, |
| श्रवणादिनादारभ्याविशेषेण दशाहमित्यन्ये। | ५० |
| दाक्षिणात्यानां मते दशाहोत्तरं मासत्रयमध्ये सपिण्डाशौचं त्रिरात्रम्। | ,, |
| चतुर्थादिमासत्रिके पक्षिणी। | ,, |
| सप्तमादित्रिक एकाहः। | ५१ |
| नवमादूर्ध्वमुदकदानसहितं स्नानमात्रम्। | ,, |
| इदं त्रिरात्राद्याशौचं विदेशान्यदेशमरणे, देशान्तरमरणे तु स्नानमात्रम्। | ,, |
| देशान्तरलक्षणं, तत्प्रसङ्गेन योजनलक्षणम्। | ,, |
| मातापित्रोः सपत्नमातुश्च देशान्तरमरणेऽपि कालाविशेषेण यथाक्रमं सम्पूर्णाशौचं त्रिरात्रं चेति दाक्षिणात्याः। | ५२ |
| दशाहोत्तरं पुत्रजन्मश्रवणे पितुः स्नानमात्राच्छुद्धिः। | ,, |
| दशाहोत्तरं ज्ञातिमरणश्रवणे स्नानादङ्गास्पृश्यत्वनिवृत्तिराशौचं तु त्रिरात्रम्। | ,, |
| पुत्रातिरिक्तसपिण्डजननाशौचेऽतिक्रान्ते स्नानमपि नास्ति। | ,, |
| मृत्युविशेषाशौचनिरूपणम्। | ,, |

| विषयः | पृष्ठसंख्या |
| --- | --- |
| डिम्बाहवहतस्य सद्यःशौचम् । | ६३ |
| अशनिहतस्य सद्यःशौचम् । | ,, |
| गोब्राह्मणार्थं हतस्य ,, । | ,, |
| जलाशयहतस्य ,, । | ,, |
| श्वापदैर्व्याघ्रादिभिर्हतस्य ,, । | ,, |
| दंष्ट्रिभिः सर्पादिभिर्हतस्य ,, । | ,, |
| युद्धेऽभिमुखं हतस्य ,, । | ,, |
| अग्निना मृतस्य ,, । | ,, |
| निर्जलदेशमृतस्य ,, । | ,, |
| प्रपातेन मृतस्य ,, । | ,, |
| महापथगमनेन मृतस्य ,, । | ,, |
| अनशनेन मृतस्य ,, । | ,, |
| दीक्षितस्येष्टिसम्बन्धिकर्मानुष्ठाने । | ,, |
| राजाज्ञयामात्यस्य, पुरोहितस्य च स्वकीयसूतकमृतकादौ" । | ६४ |
| शस्त्रहतस्य सद्यःशौचम् । | ,, |
| रज्जूद्बन्धनादिना मृतस्य । | ,, |
| विषभक्षणेन मृतस्य । | ,, |
| गोब्राह्मणार्थे दण्डेन युध्यमानानां मरणे एकरात्रम् । | ,, |
| संग्रामे दण्डेन युध्यमानानां सांमुख्ये मरणे । | ,, |
| चौरादिगृहीतानां बन्दिदशायामेव मरणे । | ,, |
| संग्रामे क्षतेन कालान्तरमरण एकरात्रमिति दाक्षिणात्याः । | ,, |
| क्षतेन सप्ताहादूर्ध्वं मृते त्रिरात्रं तदूर्ध्वं जात्युक्ताशौचमिति गौड़ाः । | ,, |
| शस्त्रहतस्य त्र्यहाभ्यन्तरं मृते त्रिरात्रं तदूर्ध्वं सम्पूर्णाशौचम् । | ,, |
| शस्त्रघातपदस्य पारिभाषिकत्वमपीत्युपवर्णनम् । | ,, |
| डिम्बाहवे शस्त्रैरभिमुखहतस्य त्रिरात्रम् । | ६५ |
| तत्रैव लगुडादिना शस्त्रैर्वा पराङ्मुखहतस्य त्रिरात्रम् । | ,, |
| बुद्धिपूर्वं वज्रहतस्य सद्यःशौचम् । | ,, |
| प्रमादतो वज्रहतस्य त्रिरात्रम् । | ,, |
| राज्ञा वधार्हापराधहतस्य सद्यःशौचम् । | ,, |
| अल्पापराधहतस्य त्रिरात्रम् । | ,, |
| गोब्राह्मणार्थमभिमुखहतस्य सद्यःशौचम् । | ,, |
| पराङ्मुखहतस्य त्रिरात्रम् । | ,, |

| विषयः | पृष्ठसंख्या |
|---|---|
| दुर्भिक्षहतस्य सद्यःशौचम्। | ,, |
| औपसर्गिकात्यन्तमरकहतस्य च सद्यःशौचम्। | ,, |
| शापहतस्य। | ,, |
| उपसर्गनिरूपणम्। | ,, |
| बुद्धिपूर्वं ब्राह्मणहतस्य सद्यःशौचम्। | ,, |
| प्रमादाद् ब्राह्मणहतस्याशौचम्। | ,, |
| पतितमरणे विदेशस्थशिशौ चाशौचाभावः। | ५६ |
| दुर्मरणे आशौचाभावप्रतिपादनम्। | ,, |
| दुर्मरणनिमित्तानि। | ,, |
| दुर्मरणे प्रायश्चित्तानुष्ठितेः पूर्वमौर्ध्वदेहिककर्मनिषेधः। | ,, |
| दुर्मृतानामौर्ध्वदेहिककर्मकरणे तप्तकृच्छ्रद्वयं प्रायश्चित्तम्। | ,, |
| वृथाजातानां [ अनाश्रमिणां ] न दाहादिकम्। | ५८ |
| प्रतिलोमसङ्कराणां न दाहादिकम्। | ,, |
| स्नेहादिना दाहकरणे प्रायश्चित्तपूर्वकमाशौचम्। | ५९ |
| आरब्धप्रायश्चित्तेऽन्तरामृते विनैव प्रायश्चित्तमाशौचादिकं कार्यम्। | ,, |
| शास्त्रविहितबुद्धिपूर्वमरणे त्रिरात्रम्। | ,, |
| विहितात्मघातप्रायश्चित्तरूप आत्मघाते त्रिरात्रम्। | ६० |
| काम्ये प्रयागादिमरणादौ च त्रिरात्रम्। | ,, |
| अत्र मैथिलानां दाक्षिणात्यानां च मतं प्रदर्श्य गौडमतकथनम्। | ६१ |
| दुर्मरणमृतानां संवत्सरादूर्ध्वं नारायणबलिपूर्वकमौर्ध्वदेहिकम्। | ,, |
| अनुगमनाशौचनिरूपणम्। | ,, |
| ब्राह्मणजातीयप्रेतानुगमने सचलस्नानपूर्वकाग्निस्पर्शघृतप्राशनाभ्यां शुद्धिः। | ,, |
| द्विजातीनां बुद्धिपूर्वकमेकान्तरितशवानुगमन एकरात्रम्, द्व्यन्तरिते द्व्यहम्, त्र्यन्तरिते त्र्यहम्, शतं प्राणायामा इत्युक्तिः। | ६३ |
| शूद्रस्य द्विजशवानुगमने सज्योतिः। | ,, |
| निर्हाराद्यशौचनिरूपणम्। | ,, |
| असपिण्डस्य ब्राह्मणस्यासपिण्डेन ब्राह्मणेन दहने वहने, तद्गृहवासे च त्रिरात्रम्। | ६४ |
| अकृतेऽपि दहनवहने अशौच्यन्नभक्षणे तज्जात्युक्तमाशौचम्। | ,, |
| अशौचिगृहवासे निर्हारादिकरणे एकरात्रम्। | ,, |
| मातुराप्तबान्धवानां मातुलादीनां निर्हरणादौ त्रिरात्रम्। (७०) | ,, |
| आशौचिभिः सह शयनाशनादिकं कुर्वतो दशाहमाशौचम्। | ६५ |

| विषयः | पृष्ठसंख्या |
|---|---|
| अनाथब्राह्मणनिर्हरणादौ पदे पदेऽश्वमेधफलं सद्यःशौचम्। | ६६ |
| मूल्यग्रहणेन दाहकस्य तत्तज्जात्युक्तमशौचम्। | ,, |
| आपदि मूल्यग्रहणेन दाहे षड्रात्रम्। | ,, |
| अत्यन्तापदि मूल्यग्रहणेन दाहे त्रिरात्रम्। | ,, |
| वेतनग्रहणेनासवर्णनिर्हरणे द्विगुणाशौचम्। | ,, |
| आचार्य-उपाध्याय-गुरुशब्दार्थनिरुक्तिः। | ६७ |
| ब्रह्मचारिण आचार्याद्यतिरिक्तस्य दाहादौ प्रायश्चित्तम्। | ६८ |
| और्ध्वदेहिकादिकर्तुः सर्वस्यापि दशाहमाशौचम्। | ६९ |
| अज्ञानात् शवस्पृष्टिस्पर्शे स्नानाच्छुद्धिः। | ७० |
| तत्तज्जातीनामस्थिसञ्चयनात् पूर्वं तदूर्ध्वं वा रोदनादावाशौचव्यवस्था। | ७१ |
| दशाहाभ्यन्तरे सजातीये समाने लघौ चाशौचान्तरपाते पूर्वाशौचेन शुद्धिः। | ७३ |
| लाघवगौरवविवेचनम्। | ,, |
| लघ्वाशौचमध्ये गुर्वाशौचान्तरपात उत्तरेणैव शुद्धिः। | ,, |
| अत्र गौड़ानां मतभेदप्रदर्शनम्। | ७५ |
| सम्पूर्णयोः सजातीययोराशौचयोः सङ्करे रात्रिशेषे दिनद्वयं प्रभाते दिनत्रयं पूर्वाशौचाधिकमाशौचम्। | ,, |
| सपिण्डाशौचमध्ये महागुरूणां मरणे उत्तरेणैव शुद्धिः। | |
| सूतिकाया अनिर्दशस्य मृतकसुतानां च न पूर्वेण शुद्धिः। | ७६ |
| मात्राशौचमध्ये पितृमरणे पित्राशौचेन शुद्धिः। | ,, |
| पित्राशौचमध्ये मातृमरणे पक्षिणीमभिव्याप्याधिकमाशौचम्। | ,, |
| पञ्चमदिवसात्पूर्वमाशौचान्तरपाते पूर्वेण शुद्धिरन्यत्र तूत्तरेणेत्यर्वाचां मतभेदप्रदर्शनपूर्वकं विवेचनम्। | ,, |
| तत्र मैथिलानां मतप्रदर्शनम्। | ७७ |
| गौडानां मतनिदर्शनम्। | ७८ |
| आशौचनिष्ठसाङ्कर्यनिरूपणम्। | ,, |
| क्वचित्पूर्वापराशौचान्तिमदिनकृत्यमेकदैवेति प्रतिपादनम्। | ७९ |
| आशौचे विधिनिषेधनिरूपणम्। | ८३ |
| आशौचे नित्यकर्मणां त्यागः। | ,, |
| आशौचेऽग्निहोत्रादीनामग्निसाध्यकर्मणां स्वकर्तृकत्वमुतान्यकर्तृकत्वमिति विस्तरेण निरूपणम्। | ८४ |
| वैश्वदेवस्याग्निसाध्यत्वेऽपि तत्र वचनान्निवृत्तिरिति कथनम्। | ,, |
| अशौचे सन्ध्याविचारः। | ८६ |

| विषयः | पृष्ठसंख्या |
|---|---|
| दशाहपर्यन्तमशौचिस्वामिकं तत्साधितं चान्नमन्यकुलजैर्न ग्राह्यमिति कथनम् । | ८६ |
| दातृभोक्त्रोर्मध्ये दातुरज्ञातृत्वे ज्ञानवतो भोक्तुरेव दोषः । | ८७ |
| उभाभ्यामप्यपरिज्ञाते न दोषः । | ,, |
| अशुचिस्वामिकेषु द्रव्यादिषु अशुचिस्वामिकत्वेनैवाशुचित्वमिति प्रतिपादनम् । | ,, |
| स्वयं गृह्यमाणेष्वशुचिस्वामिकेष्वपि लवणादिषु न दोष इत्यभिधानम् । | ,, |
| अशौचिस्वामिकमपि पण्यं मूल्येन गृहीतं न दोषावहम् । | ८८ |
| पितरि मृते वत्सरपर्यन्तं प्राप्तपितृभावाया मातुः श्राद्धं नैव कार्यम् । | ,, |
| मातरि मृतायां पितृश्राद्धवर्जं श्राद्धान्तरं न कार्यम् । | ,, |
| अशौचकालास्पृश्यत्वनिरूपणम् । | ,, |
| अपत्यजनने त्रैवर्णिकमातुर्दशाहमस्पृश्यत्वम् । | ,, |
| शूद्रायास्त्रयोदशाहमस्पृश्यत्वम् । | ,, |
| सच्छूद्राया दशाहमेवास्पृश्यत्वमिति मैथिलमतम् । | ,, |
| जननाशौचे पितुः सपत्नमातुश्च स्नानात्पूर्वमस्पृश्यत्वम् । | ,, |
| अत्र गौड़दाक्षिणात्यमतप्रदर्शनम् । | ,, |
| पितुः प्रथमदिने सूतिकास्पर्शे दशरात्रमस्पृश्यत्वं द्वितीयादिदिने शेषदिनानि यावदस्पृश्यत्वम् । | ९० |
| सपिण्डानां सूतिकास्पर्शे स्नानादस्पृश्यत्वनिवृत्तिः । | ,, |
| मरणाशौचे कियन्ति दिनान्यङ्गास्पृश्यत्वमित्यत्र निर्णयः । | ,, |
| सद्यःशौचनिरूपणम् । | ,, |
| सद्यःशौचमित्यत्र सद्यःपदार्थनिरुक्तिः । | ९१ |
| ऋत्विग्दीक्षितादीनां तत्तत्कर्मणि सद्यःशौचम् । | ९२ |
| व्रतयज्ञविवाहादौ प्रारब्धे सूतकाभावः । | ९४ |
| प्रारम्भशब्दार्थनिर्वचनम् । | ,, |
| कारुशिल्पिवैद्यादीनां तत्तत्कर्मणि नाशौचम् । | ९५ |
| विवाहयज्ञयोरन्तराऽऽशौचपाते परद्वारा दापने दातृभोक्त्रोर्न दोषः । | ९६ |
| दैवभये राष्ट्रोपप्लवादौ पूर्वशङ्कल्पिते चान्ने नाशौचम् । | ,, |
| दासदास्यादीनामनन्यसाध्ये तत्तत्कर्मणि स्नानेनैवास्पृश्यत्वनिवृत्तिः । | ,, |
| दासान्तेवासिप्रभृतीनां स्वामितुल्यमाशौचम् । | ,, |
| दासानां पञ्चदशभेदकथनम् । | ,, |
| दासदास्यादीनामाशौचविषये दाक्षिणात्यानां वाचस्पतिमिश्राणाञ्च मतम् । | ९७ |
| भूमिशुद्धिनिरूपणम् । | ९९ |
| उदकशुद्धिनिरूपणम् । | १०२ |

| विषयः | पृष्ठसंख्या |
|---|---|
| स्वभावशुद्धिनिरूपणम् । | १०६ |
| तैजसादिद्रव्यशुद्धिनिरूपणम् । | ११३ |
| अत्यन्तोपहतानां शुद्धिनिरूपणम् । | १२५ |
| पक्वान्नशुद्धिनिरूपणम् । | १२६ |
| देहादिशुद्धिनिरूपणम् । | १३३ |
| प्रक्षालनादिशुद्धिनिरूपणम् । | १३९ |
| आचमनानुकल्पनिरूपणम् । | १४० |
| आचमनापवादः । | १४१ |
| स्नानशुद्धिनिरूपणम् । | १४४ |
| मुमूर्षुकृत्यनिरूपणम् । | १५१ |
| मृतकृत्यनिरूपणम् । | १५९ |
| सूतिकामरणे कृत्यनिरूपणम् । | १७७ |
| सहगमनानुगमनप्रकारनिरूपणम् । | १७९ |
| प्रोषितमृतकृत्यनिरूपणम् । | १८४ |
| मरणविशेषे नारायणबल्यादिनिरूपणम् । | १९० |
| पञ्चकमरणे दाहप्रकारनिरूपणम् । | १९३ |
| त्रिपुष्करमृते ,, | १९५ |
| त्रिपादर्क्षमृते ,, | १९६ |
| कुष्ठिमृतौ ,, | १९७ |
| वैधदाहापवादः । | १९८ |
| उदकदाननिर्णयः । | १९९ |
| उदकदानानधिकारिनिर्णयः । | २०३ |
| पिण्डदानादिकृत्यनिरूपणम् । | २०९ |
| नवश्राद्धनिरूपणम् । | २१४ |
| आशौचान्त्यदिनकृत्यनिरूपणम् । | २१६ |
| एकादशाहिककृत्यनिरूपणम् । | २१७ |
| मृतशय्यादानविधिनिरूपणम् । | २२३ |
| वृषोत्सर्गनिरूपणम् । | २२५ |
| षोडशश्राद्धनिरूपणम् । | २३० |
| सपिण्डीकरणनिरूपणम् । | २३२ |
| तत्र केषाञ्चिन्मते संयोजनस्य प्राधान्यं श्राद्धस्याङ्गत्वकथनम् । | २३३ |
| श्राद्धस्यैव प्राधान्यं संयोजनन्तु तदङ्गमिति मतान्तरप्रदर्शनम् | २३४ |

| विषयः | पृष्ठसंख्या |
|---|---|
| अन्येषां मत उभयोरपि प्राधान्यत्वप्रतिपादनम्। | २३५ |
| श्राद्धसंयोजनयोरङ्गाङ्गिभावनिराकरणम्। | २३६ |
| अपकृष्टान्यपि षोडशश्राद्धानि स्वस्वकाले पुनः करणीयानीति कथनम्। | ,, |
| सपिण्डीकरणं पित्रादिषु त्रिषु जीवत्सु नैव कार्यम्। | २३७ |
| अन्यतमे मृते जीवन्तमतिक्रम्य कार्यम्। | ,, |
| प्रेतस्य पुत्रादेः सपिण्डनमसपिण्डीकृतैरपि पित्रादिभिः कार्यम्। | ,, |
| मातुः सपिण्डीकरणं पितामहीवर्गेण सह कार्यम्। | २३८ |
| सहगमने पितुः सपिण्डीकरणेनैव मातृसापिण्ड्यसिद्धिः। | ,, |
| अपुत्रायाः पतिकर्तृकं सपिण्डनं श्वश्र्वादिवर्गेण। | ,, |
| पतिपुत्रयोर्द्वयोरप्यभावे स्त्रियाः सपिण्डनं नास्तीति प्रतिपादनम्। | ,, |
| अन्वारोहणे भर्त्रा सह सापिण्ड्यम्। | ,, |
| स्मृत्यर्थसारोक्तविशेषाभिधानम्। | ,, |
| पुत्रिकामातुः केन सह सापिण्ड्यमिति विचारः। | २३९ |
| सपिण्डीकरणविधिनिरूपणम्। | २४० |
| मातुः पिण्डोदकदानादौ गोत्रनिर्णयः। | २४३ |
| आसुरादिनिन्दितविवाहोढायाः सपिण्डीकरणानन्तरमेव भर्तृगोत्रमिति निरूपणम् | ,, |
| ग्रन्थसमाप्तिः। | २४४ |

इति वीरमित्रोदयशुद्धिप्रकाशस्य विषयानुक्रमणिका।

---

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी।

श्रीगणेशाय नमः।

अथ

# वीरमित्रोदयशुद्धिप्रकाशः।

कोपाटोपनटत्सटोद्भटमटद्भ्रूभीषणभ्रूकुटि-
भ्राम्यद्भैरवदृष्टि निर्भरनमद्गुर्वीकरोर्वीधरम्।
गीर्वाणारिवपुर्विपाटविकटाभोगत्रुटद्धाटक-
ब्रह्माण्डोरुकटाहकोटि नृहरेरव्यादपूर्वं वपुः॥ १॥
सटाग्रव्यग्रेन्दुस्रवदमृतबिन्दुप्रतिबलन्-
महादैत्यारम्भस्फुरितगुरुसंरम्भरभसः।
लिहन्नाशाचक्रं हुतवहशिखावद्रसनया
नृसिंहो रंहोभिर्दमयतु मदंहो मदकलम्॥ २॥
संसारध्वंसिकंसप्रमुखसुररिपुप्रांशुवंशावतंस-
श्रीशी वंशीधरो वः प्रचुरयतु चिरं शं स राधारिरंसी।
यच्चूडा रूढगूढस्मितमधुरमुखाम्भोजशोभां दिदृक्षु-
गुंजाभिः सानुरागालिकानिकटनटच्चन्द्रकव्यक्तचक्षुः॥ ३॥
लीलाभ्रान्तिविसर्पदम्बरतया व्यग्रार्धकान्तं पद-
न्यासन्यञ्चदुदञ्चदद्रिवसुधाभोगीन्द्रकूर्माधिपम्।
फूत्कारस्फुरदुत्पतत्फणिकुलं रिङ्खज्जटाताडन-
ध्मातव्योमगभीरदुन्दुभि नटन्नव्यात्स वो धूर्जटिः॥ ४॥
कुम्भोद्भ्रान्तमधुव्रतावलिवलद्धुङ्कारकोलाहलैः
शुण्डास्फालनविह्वलैः स्तुत इव व्यालैर्वियत्प्लाविभिः।
मज्जत्कुम्भमहावगाहनकृतारम्भो महाम्भोनिधौ
हेरम्बः क्रियतां कृताम्बरकरालम्बश्चिरं वः शिवम्॥ ५॥
समन्तात्पश्यन्ती समसमयमेव त्रिभुवनं
त्रिभिर्नेत्रैर्दोर्भिर्दशभिरपि पान्ती दश दिशः।
दधाना पारीन्द्रोपरि चरणमेकं परपदा-
हतारिर्वो हन्यान्महिषमथनी मोहमहिषम्॥ ६॥

वामान् भिन्दन्नवामान् भुवमनुसुखयन् पूरयन्नर्थिकामान्
श्रीमान् भीमानुकारी बहलबलभरैर्मेदिनीमल्लनामा ।
आसीदाशीविषेन्द्रद्युतिधवलयशा भूपचक्रावतंसः
श्रीकाशीराजवंशे विधुरिव जलधौ सर्वभूसार्वभौमः ॥ ७ ॥
संग्रामग्रामकामो निरुपममहिमा सत्त्वविश्रामधाम
क्रामन्नेवारिचक्रं मिहिर इव तमो विक्रमोरुक्रमेण ।
सारैर्मेरोरुदारैरपर इव गिरिर्मेदिनीमल्लनेन
प्रख्यातः क्षोणिचक्रे समजनि नृपतिर्मेदिनीमल्लनामा ॥८॥
निर्व्यग्रैरस्तजर्यद्भिर्विधुमिव जगतीमर्जुनाभैर्यशोभिः
सम्पूर्यावार्यवीर्यो विशिखवितरणैरर्जुनो दुर्जनानाम् ।
साम्राज्योपार्जनश्रीरगणितगुणभूरर्जुनप्रांशुबाहु-
र्नाम्नाऽभूदर्जुनोऽस्मान्नरपतिरतुलो मेदिनीमल्लभूपात् ॥९॥
बुद्धिः शुद्धिमती क्षमा निरुपमा विद्यानवद्या मनो
गाम्भीर्यैकनिकेतनं वितरणं दीनार्तिनिर्दारणम् ।
आसीदर्जुनभूपतेर्विदधतो विद्रावणं विद्विषां
भूमीनामवनं च कारणगुणात्कार्यं यशोऽप्यर्जुनम् ॥ १० ॥

तस्मादाविरभूत्प्रभूतमहिमा भूमीपतेरर्जुनात्
सौजन्यैकनिधिर्गुणैरनवधिर्लावण्यवारांनिधिः ।
भिन्दन् दुर्जनमर्जयन् बहु यशः प्रौढप्रतापोदयै
र्दुर्जेयो मलखाननामनिखिलक्ष्मामण्डलाखण्डलः ॥ ११ ॥
यस्मिन् शासति नीतिभिः क्षितिमिमां निर्वैरमासीज्जगत्
पारीन्द्रेण समं करीन्द्ररभसारम्भोऽपि सम्भावितः ।
श्येनः क्रीडति कौतुकी स्म विहगैश्चिक्रीड नक्रैर्झषः
किं वान्यद्गहनेऽभवत्सह मृगैः शार्दूलविक्रीडितम् ॥ १२ ॥

हिमविशदयशोभिशोभिताशो
महिमतिरोहितवारिधिप्रभावः ।
समजनि मलखानतः प्रतापे
त्रिजगति रुद्र इव प्रतापरुद्रः ॥ १३ ॥
शुचि धनमर्थिनि सहसा यशसा सममानने गुणो जगतः ।
पुत्रे भूरभिदध्रे चेतो रुद्रे प्रतापरुद्रेण ॥ १४ ॥
जातः प्रतापरुद्रात्ससमुद्रां पालयन्नवनीम् ।
कृतरिपुकाननदाहो मधुकरसाहो महीपतिः शुशुभे ॥ १५ ॥

पृथुः पुण्याभोगैर्विदितहितयोगैरनुदयत्-
खलायोगैर्योगैः कृतसुकृतियोगैरपि गुरुः ।
भुजस्तम्भालम्बालसशायितविश्वम्भरतया
बभौ प्रौढोत्साहः स मधुकरसाहः क्षितिपतिः ॥ १६ ॥
प्रजांगणरुजापहो द्युतिमहोदयाविष्कृतः
सुधांशुरिव मांसलो रसभरैः सभारञ्जनः ।
प्रदीप्तकुमुदावलिर्द्विजपतिश्च न क्षत्रपो
नृपो जयति सत्कृपो मधुकरः कृतारित्रपः ॥ १७ ॥
विन्यस्य वीरसिंहे भूपतिसिंहे महीभारम् ।
ज्ञानानलमलदाहो मधुकरसाहो दिवं भेजे ॥ १८ ॥
अन्तर्गम्भीरतान्धूकृतसलिलनिधिर्लालिताशेषबन्धु
र्बुन्देलानन्दसिन्धुः सुललितललनालोचनेन्दीवरेन्दुः ।
भ्रूभङ्गीलेशभङ्गीकृतरिपुनिवहो नृत्यसङ्गीतरङ्गी
सन्मातङ्गी तुरङ्गी धरणिपतिरभूद्वीरसिंहो नृसिंहः ॥ १९ ॥
अमुष्य प्रस्थाने सति सपदि नानेभनिवहै
रिहैकोऽपि द्वेषी न खलु रणरोषी समजनि ।
परं तस्थौ दुःस्थो गहनकुहरस्थोऽपि भयतः
क्षिपन्नुर्व्वीदिक्षु भ्रमितचकितं चक्षुरभितः ॥ २० ॥
दानं कल्पमहीरुहोपरि यशः क्षीरोदनीरोपरि
प्रज्ञा शक्रपुरोहितोपरि महासारोऽपि मेरूपरि ।
दावाग्नेरुपरि प्रतापगरिमा कामोपरि श्रीरभूत्
सिंहातिक्रमवीरसिंहनृपतेः किं किं न कस्योपरि ॥ २१ ॥
दानैरर्थिनमर्थनाविरहिणं प्रत्यर्थिनं च क्षणात्
कुर्वाणे सति वीरसिंहनिखिलक्ष्मामण्डलाखण्डले ।
कामं चेतसि कामधेनुरतनोत्कल्पद्रुमः कल्पितं
मोघीभूतजनिः समाश्रितखनिश्चिन्तां च चिन्तामणिः ॥२२॥
भ्रामं भ्राममसंभ्रमं त्रिजगतीचक्राणि चक्रे चिरा
च्चारं शीलितविष्णुपादपदवी ब्रह्माण्डभाण्डोपरि ।
ब्रह्माण्डं निजमण्डमण्डलमिवाच्छाद्यैव सैवाधुना
विश्वेषामपि यस्य भास्वरयशोहंसी वतंसीयति ॥ २३ ॥
जलकणिकामिव जलधिं कणमिव कनकाचलं मनुते ।
नृपसिंहवीरसिंहो वितरणरंहो यदा तनुते ॥ २४ ॥

यदा भवति कुण्डलीकृतमहाधनुर्मण्डल
स्तदा नयनताण्डवत्रुटितखाण्डवः पाण्डवः ।
मनो वितरणोत्सुकं वहति वीरसिंहो यदा
तदा पुनरुदारधीरयमवर्णि कर्णो जनैः ॥ २५ ॥
शौर्यौदार्यगभीरताधृतिदयादानादिनानागुणा
नुर्वीदुर्वहभारवत्यहिपतिस्पर्द्धालदोःशालिनि ।
संयोज्यैव जुहारसिंहधरणीधौरेयचूडामणौ
मज्जन् ब्रह्मणि वीरसिंहसुकृती तस्थौ स्वयं निर्गुणः ॥ २६ ॥
नद्यः स्वादुजला द्रुमाश्च सुफला भूरुर्वरा भूसुरा
वेदध्वानविधूयमानदुरिता लोका विशोका बभुः ।
राजन्नीतिनिरीतिरीति पितरीवोर्वीमिमां शासति
श्रीमद्वीरजुहारसिंहनृपतौ भ्रूभङ्गभग्नद्विषि ॥ २७ ॥
संग्रामोत्कटताण्डवोद्भटभटैरारब्धहेलाहठै
श्चण्डाडम्बरपूरिताम्बरतटक्षीराब्धिगोत्राऽनटैः ।
भूभृत्सिंहजुहारसिंहधरणीजानेः प्रयाणे रणे
शौर्यौदार्यधनोऽपि को नु धरणीचक्रे न चक्रे भयम् ॥२८॥
तावद्वीरगभीरहुङ्कृतिरवस्तावद्गजाडम्बर
स्तावत्तुङ्गतुरङ्गरिङ्गणचमत्कारश्चमूनामपि ।
तावत्तोयमहामहीभृदटवीदुर्गग्रहो विद्विषां
यावन्नैव जुहारसिंहनृपतिर्युद्धाय बद्धोत्सवः ॥ २९ ॥
अयं यदि महामना वितरणाय धत्ते धियं
भियं कनकभूधरोऽश्नुति ह्रियं च कर्णोऽटति ।
दधीचिरपचीयते बलिरलीकरूपायते
तदातिमलिनायते स किल कल्पभूमिरुहः ॥ ३० ॥
प्रासादागतडागनागमणिभूदानादिनानातपः
प्रागल्भ्येन महेन्द्रचन्द्रवरुणब्रह्मेशविष्णुस्थली ।
प्राचण्ड्येन जिता मिता वसुमती कोदण्डदोर्दण्डयो
र्जागर्तीति जुहारसिंहनृपतिः कुत्र प्रतीपो न वा ॥ ३१ ॥
ब्रह्माभूच्चतुराननः स्मरहरः पञ्चाननः षण्मुखः
स्कन्दो भूपजुहारसिंहयशसो गानोत्सवेऽत्युत्सुकः ।
तस्याभोगमुदीक्ष्य भूधरनभोनद्यस्त्रिलोकी दिशः
सप्तद्वीपमयी मही च विधिना विश्वेन निर्वाहिताः ॥ ३२ ॥

तुङ्गत्वादनवाप्य दैवततरोः पुष्पाणि सर्वाः समं
श्रीमद्वीरजुहारसिंहनृपतेर्द्यांनं समानं जगुः ।
वीडाखर्वगर्वभारनिर्भरनमद्ग्रीवे तु देवद्रुमे
श्लाघन्ते सुलभायमानकुसुमास्तं भूरि देवस्त्रियः ॥ ३३ ॥
भीमो यः सहदेव एव पृतनादुर्द्धर्षपार्श्वो लस-
च्छ्रीभूमी नकुलः सदार्जुनमहाख्यातिः क्षमामण्डले ।
कर्णश्रीकृतवर्मभीष्मघटनाशौर्यार्थदुर्योधनो
रोषादेव युधिष्ठिरो यदि भवेत्कः स्यादमुष्याग्रतः ॥ ३४ ॥
सत्कीर्तिग्रामदामाभरणभृतजगद्विक्रमादित्यनामा
धाम्ना भूम्ना महिम्ना विघटितरिपुणा विक्रमोपक्रमेण ।
सुप्रांशुः पीवरांसः पृथुभुजपरिघस्तस्य वंशावतंसो
विश्वोदञ्चत्प्रशंसो गुणिगणहृदयानन्दनो नन्दनोऽभूत् ॥३५॥
आशापूर्तिं च कुर्वन् करवितरणतः पद्मिनीप्राणबन्धुः
प्रोद्यद्दिव्याम्बरश्रीः स्फुटमहिमरुचिः सर्वदाध्वस्तदोषः ।
जम्भारातेरिहोच्चैरचलसमुदयात्सुप्रभातप्रकाशी
पुत्रो राज्ञः पवित्रो रचयति सुदिनं विक्रमादित्य एव ॥३६॥
सार्थीकुर्वन्निरर्थीकृतसुरविटपी चार्थिसार्थं निजार्थै-
र्व्यर्थीभूतारिपृथ्वीपतिरमरगुरुस्पर्द्धिवर्द्धिष्णुबुद्धिः ।
मात्रैर्यानादिदानैर्बहुविधगुणिभिर्गीयते यः सभायां
प्रातर्जातः स भूपः सुकविकुलमुदे विक्रमादित्य एव ॥३७॥
दानं दीनमनोरथावधि रणारम्भोऽरिनाशावधि
क्रोधो वागवधि प्रतापयशसोः पन्था दिगन्तावधि ।
दाक्षिण्यं क्षितिरक्षणावधि हरौ भक्तिश्च जीवावधि
व्यालुप्तावधि वीरविक्रमरवेः श्रेयः परं वर्द्धते ॥ ३८ ॥
हेमाद्रेः श्रियमन्यथैव कुरुते चक्रे च गौरीं तनुं
कैलासोपरि शोभते पटयति स्पष्टं च दिङ्मण्डलम् ।
भोगीन्द्रं न दधे श्रुतौ वत जटागूढां च गङ्गां व्यधा-
ल्लोकानामयमीश्वरोऽस्य यशसस्त्वैश्वर्यमुज्जृम्भते ॥३९॥
श्रीगोपाचलमौलिमण्डलमणिः श्रीदूरवाराम्वये
श्रीहंसोदयहंसपण्डित इति ख्यातो द्विजाधीश्वरः ।
यं लक्ष्मीश्च सरस्वती च विगतद्वन्द्वं चिरं भेजतु-
र्भोक्तारं रभसात्समानमुभयोः साम्नाऽपमायं गुणैः ॥ ४० ॥
पटु दिक्षु विदिक्षु कुर्वतीनां नटलीलां स्फुटकीर्तिनर्तकीनाम् ।

स्फुरदध्वरधूमधोरणीह च्युतवेणीति जनैरमानि यस्य ॥ ४१ ॥
ततो नल इवारणेऽतुलधामभूर्भूभुजां
शिरोमणिहरोमणिर्धरणिनामवामभ्रुवः ।
रणी बहुगुणी धनी भुवि वनीपकश्रीखनी·
रमारमणमिश्रणी परशुराममिश्रोऽजनि ॥ ४२॥
येनागत्य पुरा पुरारिनगरे विद्याऽनवद्याऽर्जिता
श्रीचण्डीश्वरमग्निहोत्रितिलकं लब्ध्वा गरीयोगुरुम् ।
शुद्धा सैव महोद्यमेन बहुधा भान्ती भवन्ती स्थिरा
तद्वंश्येषु कियन्न कल्पलतिकेवाद्यापि सूते फलम् ॥ ४३ ॥
आस्यारविन्दमनुपास्य गुरोरपास्य·
लास्यं चतुर्मुखमुखेषु सरस्वतीह ।
सालङ्कृतिश्च सरसा च गुणान्विता च
यस्याऽऽतनोति रसनोपरि ताण्डवानि ॥ ४४ ॥
अङ्के लोमलतेव सीमनि दृशोरेकैव रेखाञ्जनी
कस्तूरी मकरीव भालफलके धारेव मूर्द्धालकी ।
ऊर्द्धं भृङ्गपरम्परेव कवरीसौरभ्यलोभाकुला
यस्यैवाध्वरधूमधोरणिरभूदाशाकुरङ्गीदृशः ॥ ४५ ॥
सुभासुरयशोनिधेः सुनिरवद्यविद्यानिधेः
सुचारुकवितानिधेः स्मृतिनिधेः श्रुतिश्रीनिधेः ।
अयं सुकृतगौरवात्परशुराममिश्राद् गुणै
रनूनमहिमा पितुर्जगति मित्रमिश्रोऽजनि ॥ ४६ ॥
धर्मार्थैकनिकेतनं विधिमयं कर्मावलीदर्शनं
स्मृत्यम्भोजमहोदयं श्रुतिमयं श्रीवीरमित्रोदयम् ।
द्राक्सिद्धीकृतशुद्धसिद्धिशतया श्रीवीरसिंहाज्ञया
तेने विश्वमुदे पुरे पुरभिदः श्रीमित्रमिश्रः कृती ॥ ४७ ॥
भूमण्डलाखण्डलवीरसिंहनृपाज्ञया हंसकुलावतंसः ।
श्रीमित्रमिश्रः कृतशुद्धबुद्धिः शुद्धिप्रकाशं विशदीकरोति ॥४८॥
आदौ शुद्धिस्वरूपोक्तिस्तद्भेदोऽथ विवेचितः ।
रजस्वलाशौचविधिस्ततस्तद्धर्मकीर्तनम् ॥
रजोविशेषतः शुद्धिविशेषोऽथ निरूपितः ।
गर्भच्युतावशौचं च बालाद्याशौचमेव च ॥
स्प्याशौचं चाथ कथितं सम्पूर्णाशौचमेव च ।
अथासापिण्डाशौचं तु सगुणागुणभेदतः ।

व्यवस्था कथिता वर्णसन्निपातेऽप्यशुद्धता ॥
कथिताथ विदेशस्थाशौचं सम्यङ्निरूपितम् ।
मृत्योर्विशेषेऽशौचं च शवानुगमने तथा ॥
तन्निर्हाराशुचित्वं च तथाशौचस्य सङ्करः ।
विधिश्चाथ निषेधश्च तथाशौचे निरूपितौ ॥
महागुरुनिपाते च विशिष्याशौचकीर्तनम् ।
अशौचकालास्पृश्यत्वनिर्णयस्तदनन्तरम् ॥
सद्यः शौचं तथा भूमिशुद्धिश्चापि निरूपिता ।
उदकस्य तथा शुद्धिः स्वभावेन च शुद्धयः ॥
तैजसादिद्रव्यशुद्धिरत्यन्तोपहते तथा ।
शुद्धिरुक्ताथ पक्वान्नशुद्धिश्चापि निरूपिता ॥
देहशुद्धिरथ प्रोक्ता ततः प्रक्षालनादिना ।
शुद्धिरुक्ताथ शारीरं शौचं चापि निरूपितम् ॥
तत आचमनस्याथ कल्पश्च सुनिरूपितः ।
अपवादश्च तस्याथ स्नानशुद्धिस्ततः परम् ॥
मुमूर्षुकृत्यं च ततः प्रसङ्गेन निरूपितम् ।
आहिताग्नौ मृते मर्त्ये कृत्यं कातीयशाखिभिः ॥
निरूपितं तथा स्मार्ताग्नियुक्ते तन्निरूपितम् ।
तथा बह्वृचशाखीये श्रौताग्निसहिते मृते ।
कृत्यं निरूपितं स्मार्ताग्नियुक्तेऽपि मृते तथा ॥
छन्दोगेये ततः श्रौताग्नियुक्ते मृतके सति ।
कथितं तत्रतः स्मार्ताग्नियुक्तेऽस्मिन् मृते तथा ॥
सर्वेषां च निरग्नीनां मृतौ कृत्यं निरूपितम् ।
सूतिकानां मृतौ कृत्यविशेषोऽथ निरूपितः ॥
रजस्वलामृतौ चाथ गर्भिण्याश्च मृतौ तथा ।
भर्त्रा सह सतीनां च गमनेऽनुगतौ तथा ॥
प्रकारास्त्रिन्तितः पश्चात्प्रोषिते मृतके सति ।
कृत्यप्रकारो निपुणं विस्तरेण निरूपितः ॥
मृतेर्विशेषे कृत्यानां विशेषोऽथ प्रपञ्चितः ।
तत्रादौ कथितः सम्यङ्नारायणबलेर्विधिः ॥
सर्पदंशकृतौ कृत्यविशेषोऽथ सुभाषितः ।
पञ्चकान्तर्मृतौ पश्चात्त्रिपुष्करमृतौ तथा ॥

अथ त्रिपादमरणे तद्विशेषो निरूपितः ।
व्याघ्रादिना मृतौ दानान्यथोक्तानि पृथक् पृथक् ॥
ततः सलिलदानोक्तिरस्थिसञ्चयनं ततः ।
नवश्राद्धमथाशौचान्ताहकृत्यं निरूपितम् ॥
एकादशाहिकश्राद्धान्यनुप्रोक्तान्यनन्तरम् ।
मृतशय्यादानविधिर्वृषोत्सर्गस्ततः परम् ॥
षोडशश्राद्धकथनमुदकुम्भविधिस्ततः ।
सपिण्डीकरणं चाथ विस्तरेण निरूपितम् ॥
शुद्धिप्रकाश एतस्मिन्नर्था एते महाशयैः ।
प्रसक्तानुप्रसक्त्यान्ये मित्रमिश्रैः प्रकाशिताः ॥

तत्र शुद्धिर्नामाशौचसंसर्गाभावः । आशौचं च सन्ध्यापञ्चमहायज्ञादिकर्मानधिकारसम्पादकोऽतिशयविशेषः । स च चेतने जननमरणास्पृश्यस्पर्शाद्याहितोऽदृष्टविशेष एव, ताम्रकांस्याद्यचेतने तु प्रोक्षणादिजन्यो व्रीहिष्विव चाण्डालाद्यस्पृश्यस्पर्शादिजन्योऽम्लादिसंसर्गनाश्यश्चाधेयशक्तिविशेषो न त्वदृष्टं, तस्य चेतनगुणत्वात् । उभयत्रापि वा चेतनाचेतनयोर्धर्माऽधर्मविलक्षणाधेयशक्तिविशेष एवातिशयः । तस्य सुखदुःखान्यतरजनकत्वे प्रमाणाभावेन धर्माधर्मरूपत्वाभावात् । (१)अस्तु वा तत्तच्चाण्डालाद्यस्पृश्यसंसर्गोत्पत्तिकालीनयावदम्लादिसं

---

(१) अत्र ताम्रादावम्लसंयोगे सत्यप्यस्पृश्यसंसर्गाद्यसमयध्वंसस्य सत्त्वेन तदानीमशुचित्वव्यवहाराभावाद् विशिष्टान्तं ध्वंसविशेषणतयोपात्तम् । तथा च तदानीं यावदभावान्तर्गताम्लसंयोगप्रागभावस्यासत्वान्न निरुक्तव्यवहारापत्तिः । ध्वंसात्यन्ताभावयोर्ध्वंसविरहेणास्पृश्यसंसर्गोत्पत्तिकालीनयोस्तयोरम्लसंयोगकालेऽपि सत्त्वेन तदानीमप्यशुचित्वव्यवहारापत्तिरिति यावत्पदोपादानम् । भेदघटिताभावकूटनिवेशे गौरवात् संसर्गपदं कूटलाघवार्थम् । अतीतप्रागभावभाविध्वंसघटितकूटस्य कस्यापि ताम्रादेरसत्वात् कदापि कुत्राप्यशुचित्वव्यवहारो न स्यादिति कालीनान्तं संसर्गाभावविशेषणम् । चण्डालस्पर्शक्षणे तत्पूर्वक्षणेवाऽशुचित्वव्यवहारवारणाय विशेष्यदलम् । न च निरुक्तकालीनत्वविशिष्टाम्लादिसंसर्गाभावकूटविवक्षणान्नोक्तदोष इति वाच्यम् । तथाविवक्षणे चाण्डालस्पर्शद्वितीयादिक्षणेऽपि अशुचित्वव्यवहारो न स्यात्, निरुक्तोत्पत्तिकालीनत्वविशिष्टकूटस्य द्वितीयादिक्षणेऽसत्वात् । अनुगमश्चात्र-अस्पृश्यसंसर्गोत्पत्तिध्वंसोवोभयकूटत्वम् । तच्चाशुचित्वव्यवहारप्रयोजकतावच्छेदकम् । वैशिष्ट्यं च स्वाधिकरणकालनिष्ठाधिकरणतानिरूपकतावच्छेदकत्व स्वप्रतियोग्युत्पत्तिकालीनाम्लादिसंसर्गाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वोभसंबन्धेनेति सङ्क्षेप इति ।

सर्गाभावविशिष्टस्तत्तच्चाण्डालाद्यस्पृश्यसंसर्गाद्यसमयध्वंस एव सः । अतश्च युक्तं सर्वेषाममीषां तत्तत्ताम्रकांस्यादिद्रव्याङ्कसंस्कारादिसुकृतविरोधित्वादशौचपदवाच्यत्वम् । अतस्तत्संसर्गाद्यभाव एव शौचमिति सिद्धम् । हारलतादयोऽप्येवम् ।

रुद्रधरादयस्तु शुद्ध्यशुद्ध्योरुभयोरपि भावरूपत्वमेव न त्वितरस्येतराभावत्वं विनिगमकाभावादित्याहुः ।

तत्र शौचस्यातिरिक्तत्वे चाण्डालादिस्पर्शनिमित्तकस्नानाचमनादेस्तज्जन्याशौचनिवर्तकत्वेनोभयवादिसिद्धस्य शौचध्वंसस्यान्तरहेतुत्वकल्पनापत्तेः । अन्यथा "चान्द्रायणेन शुद्धिः स्यात्" इत्यादिप्रायश्चितेऽपि पुण्यान्तरोत्पत्तिप्रसंगः । अथ तत्र पापाभाववत्त्वेव लाघवाच्छुद्धिपदप्रयोगो न तु पुण्यान्तरोत्पत्तिः; गौरवापत्तेरिति प्रकृतेऽपि दीयतां दृष्टिः । अत एव न कर्माङ्गाचमनादौ शुद्धिपदप्रयोगः । तस्य प्रयाजादिवदारादुपकारकत्वादिति दिक् ।

तत्र शुद्धिभेदानाह ।

हारीतः ।

द्विविधमेव शौचं भवति बाह्यमाभ्यन्तरं च । तत्र बाह्यं त्रिविधं कुलशौचमर्थशौचं शारीरं च, सूतकमृतकयोर्दशरात्रमुभयतः कुलस्याशौचम् । आभ्यन्तरं भावशुद्धिः । अर्थशौचं द्रव्यशुद्धिः । शारीरं=अस्पृश्यस्पर्शनाद्यशौचाभावः । तत्र कुलशौचप्रतियोगिनमाह सूतकेति । उभयतः=उभयोः सूतकमृतकयोरित्यन्वयः । दशरात्रमिति त्र्यहादेरप्युपलक्षकम् । सूतकादिग्रहणं रजस्वलादेरुपलक्षकम् । न च तच्छारीरान्तःपाति, मनुना जननाद्याशौचप्रकरणे रजस्वलाशौचस्याभिहितत्वात् । न च रजस्वलाशौचस्य स्त्रीमात्रनिष्ठत्वेन कथं कुलाशौचान्तःपातित्वं, प्रथमादिमासीयगर्भस्रावाशौचवत्स्त्रीमात्रनिष्ठत्वेऽपि कुलाशौचत्वोपपत्तेः । कुलाशौचत्वं च तादृशव्यवहारविषयत्वमेव मन्त्रलक्षणादिवदिति निबन्धकाराः । अत्र चाशौचे निमित्तनिश्चय एव प्रयोजको न तु निमित्तोत्पत्तिमात्रम् "भिन्ने जुहोति" इत्यादौ निमित्तनिश्चयस्यैव प्रयोजकत्वात् । किं च ।

अज्ञातस्य जननादेराशौचनिमित्तत्वे देशान्तरीयनिमित्तशङ्कया सर्वदा विहितकर्मानुष्ठानं न स्यात् । अत एव "देशान्तरगतं श्रुत्वा" इत्यादौ श्रुत्वेत्युक्तम् । एवं च, निमित्तनिश्चयस्यैवाशौचप्रयोजकत्वे सिद्धे दशाहाभ्यन्तरे तन्निश्चये न्यायेन प्राप्तस्यापि तत एवाशौचदिनगणनस्य वचनाद्बाधः । किन्तूत्पत्तिदिनमारभ्यैव गणनम् । एवमन्यत्रापि न्यायेनान्यथा प्राप्तौ अन्यथात्वं वाचनिकं द्रष्टव्यम् ।

अथ रजस्वलाशौचम् ।

तत्र रजःस्वरूपोत्पत्तिस्तावत्सप्तर्षिमते ।

दशवर्षाधिका कन्या भवत्येव रजस्वला ॥
बहिःपुष्पास्फुटीभावदन्तः पुष्पं स्फुरत्यपि ।
वह्निदीपशिखायोगाद्भेदः कोशस्य दृश्यते ॥

तथा—

वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि ।
अन्तःपुष्पं भवत्येव पनसोदुम्बरादिवत् ॥
अतस्तु तत्र कुर्वीत तत्सङ्गं बुद्धिमान्नरः ।

रजोनिमित्तमाशौचमाह ।

वशिष्ठः ।

रजस्वला त्रिरात्रमशुचिर्भवति । अत्र रजोनिश्चयस्यैवाशौचनिमित्तत्वमित्युक्तम् ।

प्रजापतिरपि ।

अविज्ञाते मले सा चेन्मलवद्वसना यदि ।
कृतं गेहेषु जुष्टं स्याच्छुद्धिस्तस्यास्त्रिरात्रतः ॥
निःसन्दिग्धे परिज्ञाते आर्तवे शुद्धिकारणम् ।
सन्देहमात्रे स्नानं स्यादित्युवाच प्रजापतिः ॥

मलेऽविज्ञाते सति स्त्री यदि मलवद्वसना भवेत्तदा तथा चेद् गृहे किञ्चित्कार्यं कृतं स्यात् तज्जुष्टमेव शुध्येवेत्यर्थः । आर्तवे परिज्ञाते तस्यास्त्रिरात्रतः शुद्धिः, स्नानं स्यात् शुद्धिकारणमित्यन्वयः । रात्रौ तु तन्निश्चये यदि अर्द्धरात्रात्पूर्वं रजोदर्शनं तदा पूर्वदिनम् । ऊर्ध्वं चेदुत्तरमित्येकः पक्षः । रात्रिं त्रिभागां कृत्वा तृतीयभागेनोत्तरं नो चेत् पूर्वं इति द्वितीयः । यामत्रये चेत्पूर्वं चतुर्थे परमिति तृतीयः । उदयात्पूर्वं चेत्पूर्वदिनम्, ऊर्ध्वंचेदुत्तरमिति चतुर्थः ।

कश्यपः ।

अर्द्धरात्रावधिः कालः सूतकादौ विधीयते ।
रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ॥
उत्तरोंऽशः प्रभातेन योज्यते ऋतुसूतके ।

कात्यायनः ।

रात्र्याश्चतुर्थभागात्प्राग्यदि वाससि योषितः ।
मलः स्याद्वेत्त्रिभागेण पूर्वेणाह्ना विशुध्यति ।

अर्थाच्चतुर्थभागे चेदुत्तरेणेति लभ्यते ।

तथा कश्यप एव ।

> रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
> पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥

एषां पक्षाणां देशाचाराद्व्यवस्था ।

अथ रजस्वलाधर्माः ।

रजस्वला त्रिरात्रमशुचिर्भवति, सा नाञ्जीत, नाभ्यञ्जीत, नाप्सु स्नायात्, अधः शयीत, न दिवा स्वप्यात्, न ग्रहाग्निरीक्षेत, नाग्निं स्पृशेत्, न रज्जुं सृजेत्, न दन्तान्धावयेत्, न हसेत, न किञ्चिदाचरेत्, अखर्वेण पात्रेण पिबेत्, नाञ्जलिना पिबेत्, न पात्रेण लोहितायसेन चेति । मदनपारिजातादौ तु । अञ्जलिना वा पिबेत्पात्रेण लोहितायसेन पिबेदिति पाठः । अत्र खर्वेणेति खर्वस्य सूक्ष्मस्य मृन्मयस्य प्रतिषेधः । खर्वो वामहस्त इति रत्नाकरः । लोहितायसं ताम्रम् ।

पैठीनसिः ।

न नखान्निकृन्तयेन्नोपमार्जयेत्, न स्रजं सृजेत्, न गन्धान्सेवेत, न पर्णेन पिबेन्न गोपीथेनेति । गोपीथो गोवन्मुखेन पानम् ।

हारीतः ।

भूमौ कार्ष्णायसे मृन्मये वाऽश्नीयात् । कार्ष्णायसम्=अयःपात्रम् ।

अङ्गिराः ।

> हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी ।

स्मृतिमञ्जर्याम् ।

> तस्मादुदक्यया सार्द्धं नैकगेहे तु संवसेत् ।
> प्रतिग्रहं च संवादमस्या अन्नं च वर्जयेत् ॥
> रजस्वलां पतिर्गच्छेच्चाण्डालो जायते सुतः ।
> आर्तवाभिप्लुतास्नाताजातस्त्वप्सु मरिष्यति ॥
> तैलेनाभ्यञ्जनं कुर्यात्कुष्ठरोगी प्रजायते ।
> आर्तवे चेत्खनेद् भूमिं स्वल्पायुर्जायते नरः ॥
> नेत्रयोरञ्जनं कुर्यात्काणो वान्धश्च जायते ।
> पुष्पिणी दन्तधावी स्याज्जायते श्यावदन्तकः ॥
> नखानां कृन्तनं कुर्यात् कुनखी जायते सुतः ।
> ऋतौ रज्वादिकच्छेदं कुर्यात्क्लीबः प्रजायते ॥
> तन्तूनां सृजते रज्जुमुद्बन्धनमृतो भवेत् ।
> पर्णपात्रेऽन्नमश्नीयादुन्मादी तेन जायते ॥
> खर्वे शरावे भुञ्जीयाद्वामनो वा प्रजायते ।

उदक्या पललं क्षौद्रं गन्धं पुष्पं घृतं त्यजेत् ॥
प्रवासं स्नातवा नारी ग्रहाणामीक्षणं त्यजेत् ।

एते च गन्धादिनिषेधा द्वितीयादिरजोदर्शनविषया । प्रथमे तद पवादस्य संस्कारप्रकाशे उक्तत्वात् ।

अत्र च चण्डालस्पर्शग्रहणादिनिमित्तकस्नानप्राप्तौ प्रकारमाह ।

पराशरः ।

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥
व्रतं रजस्वलानियमम् ।

अशुचिदिनत्रये विशेषमाह स एव ।

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ॥
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ।

अत्र चाण्डाल्यादिशब्दः तद्गमनादिप्रायश्चित्ततुल्यप्रायश्चित्तप्राप्त्यर्थ इति माधवः ।

चतुर्थेऽहनि च स्नानोत्तरं शुद्धिः, शौचं कृत्वा क्षत्रियादिस्त्री पादन्यूनमृत्तिकाभिर्विधवा द्विगुणाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्वकं सङ्गवे स्नायात् । स्नानोत्तरं कर्तव्यमुक्तम्—

स्कन्दपुराणे ।

सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्य चित् ।
अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥

ज्वराद्यभिभवे—

उशनाः ।

ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्मणा ॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैला वगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दशद्वादशकृत्वो वा आचमेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धिर्भवेत्तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति ।

अयं च स्नानप्रकार आतुरमात्रस्य शुद्ध्यर्थकस्नानप्राप्तौ ज्ञेयः ।

आतुरे स्नान आपन्ने दशकृत्वो ह्यनातुरः ।

स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः ॥

इति पराशरवचनात् । अन्ते च वाससां त्यागोऽसंभवाद्विषयः । यत्तु "वासोभिर्दशभिश्चैव परिधाय यथाक्रमम्" इत्यत्रिवचनं तत्संभवद्विषयम् ।

अत्र येयं चतुर्थेऽहनि स्नात्वा शुद्धिः सा रजोनिवृत्त्यभावेऽपि भर्तृशुश्रूषादौ स्पर्शादौ च ज्ञेया । दैवपित्र्यकर्माधिकारस्तु परत एव ।

स्नाता रजस्वला या तु चतुर्थेऽहनि शुद्ध्यति ।
कुर्याद्रजोनिवृत्तौ तु देवपित्र्यादिकर्म च ॥

इति पराशरवचनात् । चतुर्थेऽहनि भर्तृशुश्रूषादाविति शेषः । "चतुर्थेऽहनि संशुद्धा भवति व्यावहारिकी" इति स्मृतेः । "शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला" इति स्मृतेश्च । एवं च "रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" इति मनुवचनमपि दैवादिविषयमेव व्याख्येयम् । यत्तु "दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति" इत्यापस्तम्बवचने पञ्चमग्रहणं तद्रजोनिवृत्तिकालोपलक्षणम् । एकवाक्यतायां लाघवात् । ऋतुगमनस्य तु दैवादिभिन्नत्वेऽपि चतुर्थे निषेधः, "आद्याश्चतस्रश्च वर्जयेत्" इति वचनात् ज्ञेयः । मिताक्षराप्येवम् । मदनपारिजाते तु चतुर्थरात्रावपि गर्भाधानमिच्छन्तीति हारीतवचनात् ऋतुगमनस्य चतुर्थेदिने विकल्पः । स च व्यवस्थितः । रजोनिवृत्तौ विधिः, अनिवृत्तौ तु प्रतिषेधः । स्पर्शादिविषये तु पूर्वोक्तैव व्यवस्थेत्युक्तम् । अन्ये तु स्पर्शादिविषये यथोक्तैव व्यवस्था । दैवपित्र्यविषये तु पञ्चमेऽहनि एव रजोनिवृत्तौ शुद्धिः, न तु चतुर्थे दिने रजोनिवृत्तावपि, न वा पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणम् । पञ्चमेऽहनीति वाक्यस्य रजोनिवृत्तिवाक्यस्य चोपसंहारेणापि एकवाक्यतालाभे उपलक्षणत्वेन विवक्षायां प्रमाणाभावात् । अतश्च पञ्चमादिदिन एव रजोनिवृत्तौ शुद्धिः, अनिवृत्तौ त्वशुद्धिरेव दैवे पित्र्ये च कर्मणीत्याहुः ।

ये तु चतुर्थे स्पर्शादौ शुद्धिः । पञ्चमे दैवादौ शुद्धिः, रजोनिवृत्तेस्तु न व्यवस्थायामुपयोग इति वदन्ति । तन्मते "रजस्युपरते" इत्यादिमन्वादिवचनानां का गतिरिति न विद्मः । एकरजोदर्शनोत्तरं सप्तदश दिनमध्ये पुनारजोदर्शने नाशौचम् । अष्टादशाह एकाहः । एकोनविंशे द्व्यहः । ततस्त्रिरात्राच्छुद्धिः ।

तथा चात्रिः ।

रजस्वला यदि स्नात्वा पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥

एकोनविंशतेरर्वागेकाहः स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

सप्तदशदिनपर्यन्तमाशौचाभावेऽपि स्नानमात्रमाचारात् ज्ञेयम् । यत्तु "चतुर्दशदिनादर्वागशुचित्वं न विद्यते" इति स्मृत्यन्तरं तत्स्नानदिनमारभ्य ज्ञेयम् । अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव प्रायशो रजोदर्शनं तद्विषयम् ।

यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात्प्राचुर्येण रजोनिर्गमस्तस्या अशौचमाह ।

कश्यपः ।

त्रयोदशदिनादूर्ध्वं रजो दृष्टवती यदि ।
अष्टादशाहात्प्राग्वापि युवत्याः स्यात्त्रिरात्रकम् ॥
एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिनो मतम् ॥

अथ रजोविशेषेण शुध्यपवादः ।

तत्र रजोभेदास्तावत् ।

माधवीये स्मृतिः ।

रागजं रोगजं चैव कालोत्पन्नं तथैव च ॥
द्रव्यजं चैव संप्रोक्तं तच्चतुर्धा प्रदृश्यते ।

एतेषां लक्षणमाह सैव ।

अर्वाक् प्रसूतेरुत्पन्नं मेदोवृष्याङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं प्रजोद्भेदसमुद्भवम् ॥
अत्यर्थं यद्रजः स्त्रीणां तद्रोगजमिति स्मृतम् ।
अष्टादशदिनादूर्ध्वं स्नानप्रभृतिसंख्यया ॥
यद्रजस्तु समुत्पन्नं तत्कालोत्पन्नमुच्यते ।
भैषज्यद्रव्यस्य वैषम्याद्धातुवैषम्यसंभवम् ॥
द्रव्यजं रज इत्युक्तं तत्कादाचित्कसंभवम् ।

अत्र येयं शुद्धिरुक्ता सा कालजरजोवद्रागजेऽपि ज्ञेया । आशौचप्रापकसामान्यवाक्यस्यापवादकाभावात् । रोगजे तु विशेषः ।

रोगेण तु रजः स्त्रीणामन्वहं तु प्रवर्तते ।
नाशुचिः सा ततस्तेन तत्स्याद्वैकालिकं यतः ॥

इति पराशरस्मृतेः । वैकालिकं रजोदर्शन उत्सर्गतो यः कालः तद्भिन्नकालिकमित्यर्थः । इदं चाशुचित्वाभावप्रतिपादनं स्पर्शादिविषयम् ।

दैवादौ तु रजोनिवृत्तिपर्यन्तमशुचित्वमस्त्येव ।

